# LALITĀSAHASRANĀMA

(OF THE SECOND PART OF BRAHMĀṆḌAPURĀṆA.)

**With the Saubhāgya-Bhāskara Bhāṣya of Bhāskararāya.**



Revised

BY

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'IKAR.

**Fourth Edition.**


PUBLISHED

BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA-SĀGAR PRESS,

BOMBAY.

1935.


*Price 1½ Rupees.*



श्रीः ।

ब्रह्माण्डपुराणोत्तरभागीय

# ललितासहस्रनाम ।

भास्कररायप्रणीतसौभाग्यभास्कराख्यभाष्योपेतम् ।

भाष्यमिदं

श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्र-
श्रीमद्गम्भीररायदीक्षितसूरिसूनुना भारत्युपाख्येन
श्रीभास्कररायेण भासुरानन्दनाथेति
दीक्षानामशालिना प्रणीतम् ।

( चतुर्थं संस्करणम् । )

इदं

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा
संस्कृतम् ।

मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

शाके १८५७, सन १९३५.

मूल्यं ३॥ [illegible] रूप्यकः ।

# अथ किंचित्प्रास्ताविकम्—

इह खलु वसुंधरामण्डलवर्त्यखिलजनाभिलषणीयः सुखविशेष एव पुरुषार्थो नाम । स च पुरुषार्थः पुनः कृत्रिमाकृत्रिमेत्युभयप्रकारो यथाक्रमं काममोक्षपदाभ्यां व्याह्रियते । तदुभयसाधनत्वाद्धर्मः सकलाभिलषितो धर्मसाधनत्वादर्थोऽपि सर्वाभ्यर्थनीय एवेत्यन्योन्यं तरतमभावापन्ना अपि विशेषतः पुरुषैरभ्यर्थ्यमानत्वाविशेषाच्चत्वारोऽपि पुरुषार्थशब्दवाच्या एवेति निर्विचिकित्सः सिद्धान्तः । अथ ते पुरुषार्था अपि तादृशज्ञानविज्ञानसाध्याः । ज्ञानविज्ञाने अपि तादृशतादृशचित्तैकसाध्ये । ततश्च विविधकर्मपरिपाकायत्तविविधचित्तवृत्तिशालिनो जनाननुजिघृक्षुः परमकारुणिको भगवान् परस्परविलक्षणा अपि साक्षात्परम्परया वा परमपुरुषार्थैकप्रयोजनिका विविधा विद्याः—वेद-शास्त्र-स्मृति-पुराणे-तिहासाद्याः—प्रवर्तयामास । ततश्चाखिलानामपि विद्यानां भगवत्प्रणीतत्वाविशेषेणाधिकारिभेदेन प्रामाण्यं सिद्धम् ।

तत्र तावत्कर्ममार्ग–ब्रह्मविज्ञानेति पूर्वोत्तरभेदेन संविभक्तं भूमिकाद्वयं सिध्यति । यैस्तावदपरिमितजनुर्भिरुपार्जितपुण्यपुञ्जभरेणोत्तरभूम्यालम्बनेन ब्रह्मणो निरतिशयानन्दज्ञानरूपामृतास्वादो लब्धस्ते चतुर्थपुरुषार्थभाक्त्वेन कृतकृत्या एवेति तत्रास्मादृशामल्पप्रज्ञानां वाग्व्यापारो न प्रसरति। अथ येऽर्वाञ्चः पूर्वभूम्यालम्बनास्तेष्वपि कतिचन सुकृतिन एवानल्पपुण्यसंचयेन वैदिककर्ममार्गानुसारिणो भवन्ति । केचित्तु वैदिकेऽनतिलालसास्तान्त्रिकावलम्बिनः श्रीमद्गुरुचरणपरिचरणसमासादितश्रीमत्त्रिपुरसुन्दरीसमाराधनप्रवणाः संपद्यन्ते । उभयेऽपि ह्यैहिकामुष्मिकनिरवधिसुखभाजः सन्तो निःसीमनिजनिजपथावलम्बनेन कालेनोत्तरभूमिकारूढा भवेयुः । तत्रच त्रिपुरसुन्दर्या अपि सेतिकर्तव्यताकां भक्तिमैदंपर्येण निरूपयितुं सुन्दरीतापिनीपञ्चकं भावनोपनिषत्कौलोपनिषद्गुह्योपनिषन्महोपनिषच्चेत्यादयो वेदशिरोभागाः प्रवृत्ताः । तत्रापि पूर्वकाण्डस्य शेषभूततयाऽऽश्वलायनादिकल्पसूत्राणां मन्वादिस्मृतीनां च प्रवृत्तिवदुपनिषत्काण्डशेषत्वेन परशुरामादिकल्पसूत्राणां यामलादितन्त्राणां च प्रवृत्तिः । अष्टादशपुराणानां तु काण्डद्वयं प्रत्यपि शेषत्वेनैव प्रवृत्तिः । ततश्च सर्वेषां स्मृतितन्त्रपुराणानां वेदमूलकत्वेनैव प्रामाण्यं सेत्स्यति ।

तदेतत्सर्वमाकलय्य निखिलपुरुषार्थसाधनभूते श्रीमद्भगवत्याराधनेऽभ्यर्हिततमस्य मन्त्रशास्त्रसर्वस्वस्य **श्रीललितासहस्रनाम्नो** रहस्यतरसद्गुरुसंप्रदायैकवेद्यस्वरूपत्वेन तांस्तान्संप्रदायान्भक्तानुजिघृक्षया स्फुटं दिदर्शयिषुः पदवाक्यप्रमाणपारावारपारीणधुरीणः सर्वतन्त्रस्वतन्त्रः श्रीमन्नृसिंहयज्वगुरुचरणाराधको भारत्युपनामकः श्रीमद्गम्भीररायदीक्षितसूरिसूनुः सुगृहीतनामधेयो **भास्करराय**ः भासुरानन्दनाथेतिदीक्षानामशाली **सौभाग्यभास्कराख्यं** द्वादशकलाप्रविभागभिन्नं भाष्यं प्रसन्नगम्भीरमरीरचत् ।

पुरा किल श्रीविद्योपासकाग्रेसरो महामुनिरगस्त्यः श्रीमद्भगवतो देशिकेन्द्रस्य **हयग्रीवाख्यस्य** मुखाद्ब्रह्माण्डपुराणीयैर्मन्त्र-जप-न्यास-पूजा-पुरश्चरण-होम-रहस्य-

स्तोत्राख्यैः सप्तभिः खण्डैः श्रीमातुः प्रादुर्भावादिरहस्यजातमाकर्ण्य एतावन्तं कालं श्रुतादपि परं परमरहस्यं ललिताम्बानामसहस्रमस्तीति तपोबलादेव निश्चित्य तद्रहस्यमेकान्तभक्तायापि मे किमिति गुरवस्तिरश्चक्रुरित्यनुपदेशनिमित्तांशे संदिहानो यथावद्रहस्यबुभुत्सुर्भगवन्तं हयग्रीवं परमादरेण सविनयं पप्रच्छ । ततश्चास्य रहस्यश्रवणपात्रतामाकलय्य ब्रह्माण्डपुराणोत्तरभागं प्रक्रम्येदं ललितासहस्रनामागस्त्यायात्यन्तरहस्यतममप्युपदिदेश हयग्रीवो भगवानिति ब्रह्माण्डपुराणादेव ज्ञायते । यस्यान्तिमभागे—

"इत्येवं नामसाहस्रं कथितं ते घटोद्भव ।
रहस्यानां रहस्यं च ललिताप्रीतिदायकम् ॥
अनेन सदृशं स्तोत्रं न भूतं न भविष्यति ।
सर्वरोगप्रशमनं सर्वसंपत्प्रवर्धनम् ॥"

इत्याद्युपसंहारफलश्रुतिः ।

यद्यप्यन्यानि नैकशः सन्ति सहस्रनामानि, समाद्रियन्ते च तत्तदुपासकैस्तत्तत्सपर्याङ्गपत्रपुष्पार्पणनित्यस्तोत्रपाठादिषु, परं तानि नैतस्य तुलामर्हन्ति शब्दार्थगाम्भीर्यालंकारादिपुष्ट्यदोषताऽगौरवादिभिः । विष्णुसहस्रनामस्तोत्रस्यातिप्रौढतायामपि तत्र "पूतात्मा परमात्मा च" "क्षेत्रज्ञोऽक्षर एव च" इत्यादौ सन्ति निरर्थकाव्ययप्रयोगास्तथा कियतां नाम्नां द्विरुक्तिस्त्रिरुक्तिरपि । न तादृश्यत्र ललिताम्बासहस्रनामस्तोत्रे प्रायः स्तोभप्रयोगपुनरुक्तिरव्ययाद्यैः पूर्तिर्वा क्वचन विद्यते । यद्यपि श्रीभगवत्पादैर्विष्णुसहस्रनामभाष्ये नाम्नां द्विरुक्तिस्थले तत्रतत्रार्थभेदो वर्णितस्तथार्थभेदेऽपि नाम्नां भेदाङ्गीकारो नानार्थोच्छेदापत्त्याऽनन्यगतिकः अर्थाभेदेऽप्युच्चारणभेदाद्भेदापत्तिश्चेति न तथात्राण्वपि वैगुण्यं दृश्यते । अत्र पुनर्विशेषश्चक्ररहस्यमन्त्रोद्धारादिरूपरहस्यार्थान्तराणामपि भूरिचमत्कृतानि गुम्फितानि विलसन्ति । तथाचात्र प्रसङ्गमनुसृत्य तान्त्रिकहृद्यमार्गावलम्बिनां विविधाः परापरादिपूजाभेदाः कौलाद्या न्यासानुष्ठानप्रकाराः पुरश्चरणादिविधयः सहस्रभोजनाद्यङ्गकलापविवरणानि नैकग्रन्थालोडनवेद्यानि च सन्ति संदर्भितानि । तानि यद्यपि गुरुमुखादेव वेद्यानि तथापि विद्वच्चित्तचमत्काराय क्वचित्क्वचिद्दिङ्मात्रेणात्र भाष्ये प्रतिपादितान्येव भास्कररायेण, परंच गूढमन्त्रगोपनहानभियाखिलविवरणान्ते तत्रतत्र 'इदं गुरुमुखैकवेद्यं', 'इदं गुरुकुलाज्ज्ञेयम्', 'अत्र रहस्यं देशिकवरादवगन्तव्यं' इत्यादिसंकेतगोपनेन मन्त्रमञ्जूषा नैवोद्घाटितेत्यहोऽस्य मान्त्रिकधुरीणतासरणिः ।



श्रीः

इतः पूर्वं द्वित्रिवारं मुद्रिते ललितासहस्रनामभाष्यग्रन्थे केवलं यथाश्रुतं श्रीमद्भास्कररायचरितमस्माभिरुपन्यस्तम् । परं तदानीं ग्रन्थकर्तुः कालस्यानिर्धारणात् भाष्यान्ते ग्रन्थप्रशस्तौ "मोदच्छाया (संवत १७८५) मितायां" इति पद्ये सुस्पष्टतया कालनिर्धारणाच्च तन्न रुचिरमिति तदविच्छिन्नगुरुपरंपराप्राप्तविद्वेभ्यः सांप्रदायिकेभ्यो वास्तविकं सप्रमाणं च यच्चरितमुपलब्धं तदत्र सहृदयहृदयाल्हादाय सप्रमोदं संगृह्यते ॥

---

## श्रीमद्भास्कररायभारतीदीक्षितचरणानां संक्षिप्तमैतिह्यम् ।

स्वोपासनासिद्धिरहस्यसारसतसम्प्रदायप्रथनायनूनम् ।
आविर्भवन्ती **गुरुभास्कराख्या** पायादपायातपरदेवता माम् ॥ १ ॥

**श्रीमद्भास्कररायभारतीदीक्षितचरणा**स्तावत् दक्षिणप्रान्तीय"**बीजापुर**"-निकटवर्तिकर्णाटकदेशाभिजना आसन् । एतेषां पितृपादाः **श्रीगम्भीररायभारती-दीक्षिता** महाविद्वांसः सोमयाजिनः नानाशास्त्रग्रन्थनिर्माणकुशलाः प्रसिद्धा राजनीतिधुरीणा **बीजापुरीययवनराजसचिवा** आसन् । यवनाधीशादेशेन कृत्स्नं महाभारतं पारसीक ( फारशी ) भाषायां परिवर्त्य "भारती" इत्यन्वर्थं बिरुदं लेभिरे । वर्णितं चैतच्छंदःकौस्तुभे भास्कररायैः—

"प्रख्यातो **विजयापुरीनरपते**र्यः सेवया फारशी-
भाषाष्टादशपर्वभारतकृतिं सर्वां विपर्यासयत् ।
आचान्ताखिलशास्त्रवारिधिमिमं दृष्ट्वैव वाचंयमाः
पाराशर्यकणादजैमिनिमुखा अद्यापि चान्तर्हिताः ॥ १ ॥

यः शास्त्राम्बुनिधीन् प्रमथ्य कृतवान् ग्रन्थाननन्योपमा-
नग्निष्टोममुखैर्मखैः सुरपतिं तुष्टं गृहेऽवासयत् ।
यः काश्यां चरमायुरौज्झदमलः साम्बादभेदेन तं
तातं भारतिदीक्षितोत्तरपदं **गम्भीरराजं** नुमः ॥ २ ॥

भारत्युपाख्यबुधमण्डनसोमपीथी **गम्भीररायसुतभास्कररायशैवः** ।
छन्दांसि वक्ति सगणानि सलक्षणानि सप्रत्ययानि समतानि सयुक्तिकानि ॥ ३ ॥

इति श्रीशारदोपास्तिलब्धधीर्दीक्षितोऽग्निचित् ।
बभाषे शिवतोपाय भाष्यं भास्करभारती" इति ॥ ४ ॥

**गम्भीररायैः** स्वकृतस्य श्लोकात्मक**विष्णुसहस्रनामपद्यप्रसूनांजलि**निबन्धस्योपोद्घाते स्ववंशक्रमश्चेत्थं प्रदर्शितः—

"मन्मातुःप्रपितामहो हि भिषजां वर्यो बुधो **मुद्गलः**
श्रीवत्सान्वयसंभवो गुणनिधि**र्नारायणस्त**त्सुतः ।
तस्याण्णाजिबुधः सुतः किल पुन**र्नारायण**स्तत्सुत-
स्तं वन्दे गुरुमागमांश्च सकलान् योऽध्यापयन्मातुलः ॥ १ ॥
विश्वामित्र इति प्रसिद्धमहिमा मूर्ध्ना तपोऽग्निं त्यजन्
त्रैलोक्यं सचराचरं स सहसा संतापयन् तापसः ।
यो ब्रह्मेन्द्रमहेशमुख्यविबुधैः संप्रार्थितः पूजितो
ब्रह्मर्षित्वमवाप कोऽपि मुनिराट् पायात्पुनः सृष्टिकृत् ॥ २ ॥
तद्गोत्रोद्भव **एकनाथ** इति च **श्रीमानुदारः** शुचिः
स्तत्पुत्र**स्तुकदेव**पण्डित इति प्रौढः प्रतापोच्छ्रितः ।
तत्सूनुश्च **यमाजिपण्डित** इति ख्यातः सतां संमतो
जाया तस्य सती सतीजननुता स्या**च्चन्द्रमा**नामतः ॥ ३ ॥
दमवांश्चन्द्रमाख्यायां **यमाजि**र्यमजीजनत् ।
स सूरिशिक्षादीक्षावान् कवि**र्गम्भीरभारती**" इति ॥ ४ ॥

विश्वामित्रगोत्रे मूलपुरुष **एकनाथः**, तस्मा**त्तुकदेवः**, ततो **यमाजिपण्डितः**, अस्मादेव विदुष**श्चन्द्रम्माम्बायां गम्भीररायः** समभूत् । श्रीगम्भीररायो भागवतसम्प्रदायवंश्योऽपि श्रीवत्सगोत्रसंभूताद्विजापुरराजवैद्य**मुद्गलभट्टवंश्या**दागमाचार्या**न्नारायण**नामकात्स्वमातुलात्कृत्स्नमागमशास्त्रं जग्राह । **श्रीमान् गम्भीररायः** प्रायः राजकार्यानुरोधेन **विजापुर**मध्यवसत् । कदाचित्कार्यवशात् **भागानगरा**-पराभिधेय (दक्षिणहैद्राबाद) इति प्रसिद्धं नगरं सपत्नीको जगाम । तदानीमेव तत्सहधर्मचारिणी पतिव्रता सुशीला **कोनमाम्बाख्या** प्राचीदिग्बालभास्करमिव **बालभास्करं** प्रासूत । बाल्ये पितुरेव वाग्देवतामनुमवाप्य तत्साधनादवाप्तसारस्वतानुभावो **भास्कर**-स्तेजसा शास्त्रेषु कृतश्रमानपि विदुषोऽतिशेते स्म । तीर्थयात्राप्रसङ्गतः काशीक्षेत्रं गतै**र्गम्भीररायै**स्तत्रैव स्ववैभवानुरूपसम्भारै**र्भास्कर** उपनीयते स्म । ततः परं **नारायणपेठ** इति प्रसिद्धनगरसमीपे **लोकापल्लीग्रामे** निवसतामशेषविद्याकूपारपारदृश्वनां साक्षात्कृतपरदेवतानां **श्रीनृसिंहयज्वनां** सकाशादल्पावकाशेनैव गृहीताष्टादशविद्यो **भास्करो** गगनमध्यगताम्बरमणिरिव विबुधमण्डले दिदीपे । तदनु गुर्जरमण्डलमण्डनायमानात् **सूरतनगरवास्तव्यात् "प्रकाशानन्दनाथदीक्षानाम्नः शिवदत्तशुक्लाख्या"**दुपासनामार्गप्रवर्तकपरमाचार्यशिरोमणेः पूर्णाभिषेकदीक्षामवाप्य तदनुज्ञया साक्षात्कृतपरदेवतात्मा **भास्करो** जगदुद्धारार्थमखिलं भारतमण्डलं पर्यटितुमारभत ।

"यत्तु **वैदिककोश** इत्याख्यं **श्रीभास्कररायप्रणीतं** ग्रन्थं संमुद्र्य तदुपोद्घाते प्रसिद्धैः संप्रति स्वकर्मानुरूपलोकान्तरवासिभिः **"आर्. जी. भाण्डारकर"** इत्या-

ण्यैरांग्लशिक्षामण्डितपण्डितप्रकाण्डैर्भास्कररायविषये समुपन्यस्तम् ,—"अयं **बीड** निवासी **सांगली**निवासी वा कश्चित्कुष्ठमहारोगाक्रान्तो माधुकरीवृत्तिलब्धान्नभुक् भिक्षुक आसीत् । कुष्ठमहारोगनिवृत्तयेऽनेन सूर्याराधनं कृतम् । **तृचभास्करनामकं** ग्रन्थं च प्रणीतवान्" इति । तत् भास्कररायैतिह्यानाकलनमूलकम् , अद्याऽपि विदुषां समाजे तिलकायमानानां श्रीमद्भास्कररायशिष्यप्रशिष्यसम्प्रदायानुगानामरुन्तुदमप्रमाणं **चेत्यनादयमेव** ।

**तृचभास्करग्रन्थ**प्रणयनस्य वास्तविक इतिहासस्त्वित्थम्—महाराष्ट्रसम्राजः **श्रीशिवराज**पौत्रस्य **शाहूराजस्य** सेनापतिर्**धनाजीजाधवः** तत्पुत्रश्**चन्द्रसेनजाधवो** भास्कररायाणां प्रियशिष्य आसीत् । अपुत्रतया खिद्यमानमानसः स एकदा स्वभार्यया सह गुरोर्दर्शनाय समागतः सन् "भगवन् सभार्यस्य पुत्रकामस्य भवत्प्रसादेन ममेप्सितसिद्धिर्भवतु" इति **श्रीभास्कररायगुरुं** प्रार्थयामास । कृपानिधिर्गुरु**र्भास्करो**ऽपि तदभिप्रायमवगम्य "ममाशीर्वचनात् पुत्रस्ते भविष्यति" इत्युक्त्वा प्रसादं च प्रदत्तवान् । अथ गुरुवचनं शिरसाऽऽदाय सभार्यश्चन्द्रसेनः स्वराज्यं जगाम । **भास्कररायो**ऽपि निजसङ्कल्पानुसारयोग्येषु धर्मप्रचारार्थं संचचार । **श्रीभास्कररायाशिषा**ममोघतया चन्द्रसेनभार्या त्वरितं गर्भं दधार । अत्रान्तरे श्रीभास्कररायकृपाप्राप्तमन्त्रः **नारायणदेवनामा** भ्रमराम्बिकामाराध्य लब्धवाक्सिद्धिर्भालकी[1]संज्ञकां चन्द्रसेनराजधानीमाजगाम । श्रुततत्प्रभावश्चन्द्रसेनस्तमुपेत्य निजभार्यायां किंसंतानं भवेदिति इत्यपृच्छत् । स तु यदृच्छया पुत्रीभविष्यतीत्यवोचत् । अथ चन्द्रसेनः पुनस्तमब्रूत "कथमुच्यते भवता पुत्रीति, अस्मद्गुरुभिः **श्रीभास्कररायैस्तु** पुत्रो भविष्यतीत्युक्तम्" श्रीभास्कररायाणां नाम श्रुत्वैव गुरुं संस्मृत्य साष्टाङ्गं प्रणमन् स सिद्धश्चन्द्रसेनं निर्भर्त्स्य सक्रोधमवादीत्–'मूर्ख ! किं कृतं भवता ? अहमप्यस्मि श्रीभास्कररायाणामेव शिष्यस्तैरेव सानुग्रहमुपदिष्टोऽहं तत्प्रसादादेव वाक्सिद्धिमवाप्नवम् । सा मे वाक्सिद्धिर्गुरुवचसो व्यर्थीकरणाय भवता प्रवर्तिता अथैतस्य पाप्मनः फलमपि भुज्यताम् । गुरुभिरुक्तं पुत्र इति, मयोक्तं पुत्रीति, तदुभयमपि विफलं भवेत्, नपुंसकं ते सन्तानं भविष्यति, इत्युक्त्वा स सिद्धस्त्वरितं ततो निरगात् । अथ तत्कथनानुसारं चन्द्रसेनस्य **रामचन्द्र**नामकं नपुंसकं सन्तानं बभूव । कतिपयैरब्दैः पुनरपि **भालकी**संज्ञकां चन्द्रसेनराजधानीं समागते गुरौ **भास्कररायो** सापत्यकलत्रश्**चन्द्रसेन**स्तद्दर्शनायाऽऽगमत् । प्रणमन्तं चन्द्रसेनतनयं नपुंसकलक्षणोपेतं दृष्ट्वा विस्मितो गुरुः किमेतदित्यपृच्छत् । लज्जितश्चन्द्रसेन आत्मनश्चापलमूलकमपराधं निवेद्य नारायणदेवशापवृत्तं चाख्याय भूयोऽपि गुरुचरणौ शरणीचकार । कृपानिधिर्गुरुराजो **भास्कर**स्तं तस्यापराधं विदन्नपि स्ववचोऽमोघत्व-

---

१ पेशवेकुलालंकारेण बाळाजीविश्वनाथसूनुना बाजीरावनाम्ना तदानींतनशाहूसम्राजः प्रधानेन सह जाधवकुलोत्पन्नस्य चंद्रसेनस्य केनापि कारणेन विरोधः समजनि । अतश्चंद्रसेनः दिल्लीपतिं यवनराजं शिश्राय । तेन च निजमाण्डलिकात् निजामराजसकाशात् करभारं ग्रहीतुं नियुक्तः सन् कर्णाटकप्रदेशे भालक्याख्यां स्वराजधानीं स्थापयामास ।

रक्षणाय तं **रामचन्द्रजाधवं** स्वेन सहादाय तस्य पौरुषप्राप्तये **मूलह्रद इत्याख्ये** सम्प्रति कर्णाटकभाषायां "**मुलीमङु**" इति प्रसिद्धे कृष्णातीरवर्तिनि पुण्यक्षेत्रे निवासं कृतवान् । तत्र कृष्णायां तृचार्घ्यदानाऽनुष्ठानमारब्धवांश्च । निवाससदनाद्दूरवर्तिं कृष्णाप्रवाहं पादचारेणैव गतवतो गुरोः पादयोः शोथं दृष्ट्वा पादसंवाहकाः शिष्याः कृष्णातीर एव शिबिरसन्निवेशाय गुरुं प्रार्थयामासुः । तेषां तादृशीं प्रार्थनामाकर्ण्य विनोदरसिको गुरुः—"निवाससदननिकट एव कृष्णाप्रवाहोऽत्रैव आनीयतामिति कथं न प्रार्थ्यत" इत्युक्तवान् । "समर्थानां श्रीपादानां न तदपि दुष्करम्" इति शिष्याः प्रत्यूचुः । ततस्तेषां प्रतिवचनं श्रुत्वा यदृच्छया निवाससदननिकट एव कृष्णापाथः-प्रवाहानयनाय कृतपणो गुरुराद् भास्करः परेद्युः प्रातस्तत्रैवासनं बद्ध्वा सूर्यमाजुहाव । सद्यः पुरः आविर्भवन्तं गगनदीपनं भास्करं भूचरो भास्करो बभाषे—"भगवन् ! भुवनपालक ! रामचन्द्रजाधवस्य पौरुषप्राप्तये मया कृष्णाप्रवाहे तृचार्घ्यदानानुष्ठानमारब्धम्, इतो मम निवाससदनात् दूरे कृष्णा प्रवाहः तद्भवता ममानुष्ठानसम्पत्तयेऽत्र मन्निवाससदनस्याविदूर एव कृष्णाप्रवाह आनेतव्यः । इदं किल भवत्प्रीतयेऽनुष्ठानमारब्धम् तत्सौकर्यसम्पादनं च भवत एव कर्तव्यकोटीमाटीकत इति भवानेवात्र मयाऽऽयास्यते" इति । तच्छ्रुत्वा सूर्योऽब्रूत–"पण्डितेन्द्र ! उपासकशिरोमणे ! किंभवान् न जानाति भगवतो हिरण्यगर्भस्य सङ्कल्पम् ? सृष्टेरादौ यासां यासामापगानां यो योऽध्वा निश्चितः, ताभिस्ताभिस्तेनतेनैवाध्वना प्रयातव्यम् । तत्परिवर्तनं दुष्करमेव । किंच रामचन्द्र-जाधवस्य पौरुषप्राप्तिरेव भवदभीष्टा चेत् सा मया दृक्पातेनैव साधयिष्यते, तदर्थं तृचार्घ्यदानानुष्ठानं कृष्णापाथःप्रवाहपरिवर्तनं च नावश्यकम्," इति । सूर्यस्येत्थं निगदितमाकर्ण्य **गुरुर्भास्करः** सकोपमाह "सूर्य ! किं मां भिक्षुकं मन्यसे । रामचन्द्रजाधवस्य पौरुषप्राप्तिः किं मया स्वबलेनैवसम्पादयितुं न शक्यते ? आगन्तुको दोष आगन्तुकेनैवोपायेनापनेय इति मे मनीषा । तद्यदि भवान् जगति स्वोपासनामार्गमक्षुण्णं रक्षितुमिच्छति, तर्हि मदनुष्ठानसौकर्याय कृष्णाप्रवाह इहानीयतां भवता । नोचेत् नानाविधोपायैः यथा भवदुपासनामार्गः सर्वथा जगतीतलान्निर्मूलयिष्यते तथा प्रयतनमेव मदीयं मुख्यतमं कर्तव्यं भवेत् । कर्तुमकर्तुमन्यथाकर्तुमसमर्थस्योपासनाखण्डनमेव युक्तम्" इति ।

**भास्कररायो**क्तिं श्रुत्वा व्याकुलोंऽशुमाली श्रीभास्कररायजीवितावधि कृष्णापाथःप्रवाहपरिवर्तनमन्वमन्यत । **भास्करो**ऽपि तत्तथेत्यङ्गीकृतवान् । अथ तृचार्घ्यदानानुष्ठानेन रामचन्द्रस्य पौरुषमुदभूत् । भास्कररायजीवितावधि च मध्येवनं कृष्णापाथःप्रवाहः प्रादुरासीत् । अद्यापि तत्र मध्येवनं सैकतपङ्क्तिमसम्बद्धां लोकाः साश्चर्यं पश्यन्ति । किंच स **मूलह्रदा**ख्यो ग्रामस्तदनु चन्द्रसेनेन **श्रीभास्कररायेभ्यः** समर्पितः । भास्कररायैश्च स तत्रत्यविप्रेभ्योऽग्रहारीकृतः । तत्र बहवश्चिञ्चावृक्षाः सन्ति येषां चिञ्चाफलानि मूल्यमन्तरेव विप्रैरुपभोग्यानीति भास्कररायाणां मनीषानुमीयते । कालक्रमेण स ग्रामो निजामराज्याधीनो जातः, यदि कोऽपि निजामराजपुरुषस्तानि चिञ्चाफलानि विक्रीय धनमर्जयितुमिच्छति, तदैव तेषु चिञ्चाफलेषु कृमयः सम्पद्यन्ते इत्यद्यापि जागर्ति तत्र **श्रीभास्कररायगुरोराख्या** । ततः परं श्रीभास्कररायै-

जगदुपकाराय तृचभास्करः प्रणीतः । आत्मनः सूर्येण सह योद्धृत्वं च श्रीभास्करराये: स्वप्रणीते श्रीगुरुस्तवारार्तिके इत्थमुल्लिखितम्—

"जय नाथ जय नाथ जय सद्गुरुमूर्ते ।
हर मम मतिमिह वार्ते परिहृतभवजूर्ते ॥ ध्रु० ॥ जय० ॥

उन्मन्या अपि परतो निवसस्यतिकूटे । दशशतदलसरसीरुहशशिमयकरहाटे ।
अकथादिकरेखात्रिककलिते शृंगाटे । अन्तःकोणत्रयगतलक्षहृमयपीठे ॥ १ ॥
नाथ वराभयवितरणमुद्राकलितकरा । न भवति देवान्तरवन्मम देवी त्रिपुरा ।
तन्मुद्रे तदभिन्ने त्वयि सति किमिति परा । तस्माद्देशिकवर मयि कथमिव जन्मजरा ॥
तव पादाम्बुजमध्वास्वादनतो बुद्धा । योनेर्मुद्रां बद्धा पवनावपि रुद्धा ।
अहमभवं शिववद्धावेशोऽथषडध्वाऽऽमर्शत्यक्तक्रदध्वा भास्करसह युद्धा ॥

इदमित्थं **तृचभास्करग्रन्थनिर्माणे** वृत्तम् । **आर. जी. भाण्डारकर**महोदयै-स्त्विमं वास्तविकमितिहासमविदद्भिर्ग्रन्थान्ते **श्रीभास्करराये:** फलश्रुतिमुखेनोल्लिखि-तानां श्लोकार्थानां विपर्यासः कृतः । ते च श्लोका इत्थम्—

"सञ्चाराद्बहुदेशानां रोगैर्बहुभिरर्दितः ।
रसायनानि भूयांसि सिषेवे वत्सरत्रयम् ॥ १ ॥
अमोघैरपि तैस्तेषां न च लोमाऽप्यमीयत ।
तदा भास्कररायोऽस्तौद् **भास्करं** लोकभास्करम् ॥ २ ॥
बाह्यान्तरतमोजाड्यरोगपातकघातकम् ।
स्मृतमात्रः कर्मसाक्षी धियमेतामचोदयत् ॥ ३ ॥
तृचार्घ्यदानतो रोगाः प्रणश्यन्त्यचिरादिति ॥"

इत्थं सूर्यप्रेरणया तृचार्घ्यदानमनुतिष्ठतो **भास्कररायस्य**—

"दशमे दिवसे तस्य रोगाः सर्वे लयं गताः ।
इत्थमत्यद्भुतं दृष्ट्वा ये प्रत्याख्यातभास्कराः ।
भिषजस्ते भेषजानि व्यर्थान्येवेति मेनिरे ॥" इति **(तृचभास्करान्ते)**

इत्युल्लिखता **भास्कररायेण** स्वोदाहरणोपन्यासेन सूर्यसेवासमर्थनमेव कृतम् । एतादृशानां महापुरुषाणां कुष्टमहारोगाक्रान्तिः स्वप्नेऽपि न सम्भाव्यते अतो महा-पुरुषान्निन्दन् **भाण्डारकरमहोदय** अश्रद्धेय एव । इत्थमेव बहून्यन्यान्यपि परमाश्चर्यकराण्यावेदनानि **श्रीभास्कररायाणां** प्रतिद्धानि सन्ति तानि यथा-सम्भवं सप्रमाणानि साहित्याचार्य**खिस्ते** इत्युपाह्व**श्रीनारायणशास्त्रि**प्रणीते **"श्रीभास्करचरितचम्पूग्रन्थे"** सविस्तरं प्रपञ्चयिष्यन्ते । **श्रीभास्करराये:** प्रायः कृत्स्नं भारतवर्षं भूयः सञ्चारेण पवित्रीकृतम् । तत्समसामयिकाः सर्वेऽपि राजा-नस्तेषां शिष्यभूता एवाऽऽसन् । तथाचोक्तं श्रीभास्कररायशिष्येण **जगन्नाथेन** स्वकीये कल्पसूत्रनिबन्धे, **भास्करविलासे** च—

"यस्याऽदृष्टो नास्ति भूमण्डलांशो यस्याऽदासो विद्यते न क्षितीशः" ॥ इति ॥

तथाच—

"श्रेयोमार्गनिरूपणायशरणापन्नेषु बद्धादरा
दुर्वारप्रतिवादिचक्रविमदीकारप्रकारोत्तराः ।
साष्टाङ्गं प्रणमन्नरेन्द्रमुकुटीरत्नप्रभामेदुरा
श्रीमद्भास्करभारतीपदनखज्योत्स्नाङ्कुराः पान्तु नः ॥" इति च ।

यत्त्वस्माभिर्निर्णयसागरमुद्रणालये १८३६ परिमितात् शालिवाहनशकाब्दाद्विस्त्रिवारं मुद्रिते ललितासहस्रनामभाष्यपुस्तके अष्टमपत्रे "अथकदाचिद्भास्कररायः" इत्यारभ्य दशमपत्रे "सहागतैरखिलैः पण्डितैः सह जगाम गृहान्" इत्युपन्यस्तं तत्सर्वं विपर्यस्तकिंवदन्तीमूलकमेव । तथा च **श्रीमद्भास्कररायचरणाः** न वामाचारिणः किंतु श्रुत्यविरुद्धमतानुसारिण एव यतस्तैरेव प्रकृतग्रन्थे १८३ पृष्ठे सव्यापसव्यमार्गस्थेति नामनिर्वचनाऽवसरे वाममार्गमुद्दिश्य ईदृशमार्गे देवर्षिपितॄणामृणशोधनाऽभावजन्यं पातकमिति । दक्षिणमार्गमुद्दिश्य तत्तद्देवताविषयकतन्त्रेषु यानि कर्माणि विहितानि तानि तदङ्गत्वेनैवेति सर्वकर्मणामुपरोधाऽभावादस्मिन्मार्गे तादृशं पातकं नास्तीति झटिति मोक्षः । वाममार्गे तु विलम्बितः । अस्मिन्नेव प्रकरणे स्थलान्तरे "यथा तथा प्रकारेण दाक्षिण्येनैव पूजयेत् । यो दाक्षिण्यं विनाभावं महामायामिहार्चति । स पापः सर्वलोकेभ्यश्च्युतो भवति रोगधृक् ।" इति कालिकापुराणश्लोकमुपन्यस्य श्रौतमार्गानुयायिनां वाममार्गाश्रयणं बहु निन्दितम् । **भास्कररायास्तु** स्वोपज्ञग्रन्थेषु स्थले स्थले, सोमपीथी, महाग्निचिदित्याद्युपपदपूर्वकं स्वनामोल्लेखनं चक्रुः । कथमेतादृशाः सत्यनिष्ठाः शिष्टाः स्वनिन्दितं मार्गमनुतिष्ठेरन्? स्वीये **सौभाग्यभास्करे** यैर्यैः साधनैर्भिन्नभिन्नाधिकारिभिर्विविधपथेषु **परदेवता** यथायथोपास्यते तथा तथा तत्तदधिकार्यभिमतसंभवदखिलार्थान्संकल्प्य भाष्यकारैर्दर्शिताः । अतो ये ये नामार्था भाष्ये लिखितास्तेते सर्वेऽपि भाष्यकारैरनुष्ठिता इति न भ्रमितव्यम् । मुद्रितायां किंवदन्त्यां यदुक्तं **कमलाकरभट्टपितामहनारायणभट्टाः श्रीभास्कररायाणां** समकालीना इति तदपि भाष्यसमाप्तिकालः मोदच्छायामितायांशरदीति-विक्रमसंवत् १७८५ परिमितः **श्रीभास्कररायैः** स्पष्टं निर्दिष्टः नारायणभट्टस्य पौत्रः कमलाकरभट्टः वसुऋतुऋतुभू (१६६८) मिते गतेऽब्दे "नरपतिविक्रमतोऽथ याति रौद्रे तपसि शिवतिथौ समापितोऽयमिति" निर्णयसिन्धुनिर्माणकालं स्पष्टं लिलेख, निर्णयसिन्धुललितासहस्रनामभाष्यकालयोरन्तरं सप्तदशोत्तरशतवर्षीयं स्पष्टमेव । किं पुनः निर्णयसिन्धुप्रणेतुः पितामहस्य नारायणभट्टस्य भास्कररायाणां समागमवर्णनजल्पेन । अतस्सर्वापि सा किंवदन्ती सुधीभिरश्रद्धेया एव, सप्तशतीटीकायां गुप्तवत्यामपि "ब्राह्मणो मदिरादानाद्ब्राह्मण्यादेव हीयते" तथाच **भाट्टचन्द्रोदये** प्रथम मयूखे "धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्" इति सूत्रे दीपिकाव्याख्याने ताराभक्तिसुधार्णवकारस्य वचनमुपन्यस्य "क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः । माक्षिकैर्वैश्यवर्णैश्च आसवैः शूद्रजातिभिः । वर्गाऽनुक्रमयोगेण द्रव्यभेदा भवन्ति हि ।" इति तन्त्रवचनैरेव श्रुतिस्मृतिसंमताचारः सिद्धान्तितः ।

मुद्रिते **भास्करविलासे**—

"वादे **मस्करिणं माध्वं** विधूयामुष्य बन्धुजाम् ।
पार्वतीं व्यवहत् कीर्त्या समं सत्यप्रतिश्रवाः ॥" इति ॥

तथा च

—"प्रान्तेषु वर्यैर्वेदान्ते नितान्ते डितनैपुणः ।
अतनोदान्तरध्वान्तखण्डकं **चण्डभास्करम्** ॥" इति च ॥

भास्कररायाणां साक्षाच्छिष्यस्य जगन्नाथस्योक्त्या स्पष्टमेव **श्रीभास्कररायैः माध्वमतखण्डनपूर्वकं श्रीशाङ्करमतमेव** प्रवर्तितम् । मध्वमठाधिष्ठितसत्यबोधयतिं वादे निर्जित्य तद्भ्रातृकन्यकां तप्तमुद्राङ्कितां प्रायश्चित्तैर्विशोध्य स्मार्ताचार्यद्वारा कन्यादानं स्वीकृत्य तां व्यवहत् । अतस्तैर्मध्वानुयायिभिर्द्वेषबुद्ध्या **श्रीभास्कररायाणां** निन्दाव्यञ्जकानि वस्तुस्थितिविपर्यासमूलकान्यसत्यचरितानि कल्पितानि तानि सुधीभिरश्रद्धेयान्येव ।

द्वैतवादिनां ध्वान्तानां श्रुतिस्मृतिपुराणादिष्वपि वास्तविकसत्यवचनोत्पाटनपूर्वकं स्वकपोलकल्पितासत्यवचनप्रक्षेपणचातुर्यसाहसं पुराणप्रसिद्धमेव (बेळगांवसमाचारमुद्रणालये १८०७ शालिवाहनशकाब्दे पार्थिवनामसंवत्सरे) मुद्रितसटीक-**ईशानस्तुतौ**—

"कुर्वन्नन्धान्समस्तान्विकलमतियुतानन्धको मूकदैत्यः
सर्वेशानस्य शूलाहतिहतवदनो द्वेषयुक्तः कलौ सः ।
उत्पन्नो **मध्वनामा** शिवगुरुवचनक्रोधकस्तन्त्रकर्ता
ह्यासीत्तस्य प्रकृष्टप्रलपनकुमतध्वंसकृद्दीक्षितोऽभूत्" ॥ (श्लो० ३५)

इत्यस्य पद्यस्य व्याख्यानावसरे **स्कान्दान्तर्गतकेदारखण्डस्थै**कषष्टितमाध्यायान्तर्गतयुगधर्मप्रस्तावे कलियुगधर्मनिरूपणावसरे गरुडं प्रति भगवतोक्तं सङ्गृहीतं चैतट्टीकाकृता विस्तरेण

तद्यथा—

"क्रोधः कर्णाटदेशीयः कामशास्त्रं समीक्ष्य च ।
स्वयं व्याख्यास्यते पुत्र तद्विरुद्धमते स्थितः ॥ १ ॥
तत्त्ववादसमाख्यां च कृत्वा तस्मिन्निजागमे ।
श्रुतिस्मृतिपुराणानि भञ्जयिष्यति सर्वशः ॥ २ ॥
स्वयं करिष्यते पुत्र पुराणानि श्रुतिस्मृतीः ।
अष्टादशपुराणेषु स्मृतिष्वष्टादशस्वपि ॥ ३ ॥
अद्वैतनिरतं सर्वं वाक्यमुत्पाटयिष्यति ।
कारयिष्यति पुंड्राणि वेणुपत्राकृतीनि च ॥ ४ ॥
स्वकल्पितपुराणानि ख्यापयिष्यति भूतले ।
तत्त्ववादमते स्थित्वा केचिद्ब्राह्मणबान्धवाः ॥ ५ ॥
दाहयिष्यन्ति गात्राणि तप्तलोहैर्द्विजाधमा" इति ॥

कैमुतिकन्यायेन **माध्वादि**प्रतिवादिमतध्वंसबद्धपरिकराणां श्रीमद्भास्कररायाणां चरिते निन्दाव्यञ्जकानि वचनान्येवंविधाः साहसिकाः कथं न कल्पयेयुः ?

एतादृशान्येव ध्वान्तजल्पितानि वचनानि विश्वस्य **धर्मसिन्धुकारो**ऽपि बभ्राम, इत्यनुमीयते । यत्तेन नवरात्रप्रकरणे "**नवीनतराः भास्कररायप्रभृतयोऽपि**" इत्यादिनोपक्रम्य "**तन्न वयं तत्त्वं जानीमः**" इत्यन्तेन **श्रीभास्कररायचरितं** कलुषीकर्तुं प्रयतितं तदन्तिमवाक्यादेव तेनाऽपि यथाश्रुतमेव जल्पितमिति प्रतिभाति ।

वस्तुतस्तु काशीक्षेत्रमुपागतैः **श्रीभास्कररायै**स्तत्रैव श्रीपरदेवताज्ञया **ललितासहस्रनामस्तोत्रे** सौभाग्यभास्करं नाम भाष्यमुपनिबद्धम् । अनेकग्रन्थप्रणयनप्रसिद्धैः श्रीमच्छंकराचार्यनवावतारैः **श्रीविद्यारण्यस्वामिचरणै**र्ललितासहस्रनामभाष्ये चिकीर्षिते सति श्रीललिताम्बया स्वयं प्रादुर्भूय तथाविधभाष्यकरणात् ते प्रत्याख्याताः । अथाऽपि तैराग्रहाद्भाष्ये कर्तुमारब्धे सति तेषां बुद्धिः कुण्ठिताऽभूत् नेत्रज्योतिश्च मन्दमभूत् । तद्दृष्ट्वा भाष्यकरणान्निवृत्य श्रीललिताम्बां शरणं गत्वा पूर्ववदासन्निति तदानींतनविद्वन्मण्डले प्रसिद्धाऽऽसीदियमाख्यायिका । **श्रीभास्कररायैः** परदेवताज्ञया ललितासहस्रनामभाष्यं विरचितमिति तस्य प्रामाणिकत्वे सन्दिहानाः काशिकास्तदानींतना विद्वांसः **श्रीभास्कररायाणां** परीक्षां कर्तुमैच्छन् । काशिकतात्कालिकविद्वत्प्रमुखप्रसिद्ध**श्रीकुङ्कुमानन्दस्वामिना**मादेशमनुसरन्तः काशिका विद्वांसः **श्रीभास्कररायान**पृच्छन्–"यदि भवद्भिः परदेवताज्ञयैव भाष्यमिदं प्रणीतं, तर्हि "महाचतुःषष्टिकोटियोगिनीगणसेविता" इति नाम्नि निर्दिष्टानां चतुःषष्टिकोटियोगिनीनां नामानि चरितानि च वर्णयन्तु भवन्तः" इति । **श्रीभास्कररायास्तु** तेषां वचनान्युररीकृत्य तान् सायन्तनहोमानन्तरं गङ्गातीरे संघशः समेतुं समादिशन् । अथ सायन्तनमाह्निकं समाप्य गङ्गातीरेऽसंख्यैः पण्डितैः सह **भास्कररायेषु** समुपविष्टेषु एकः पण्डितश्चतुःषष्टिकोटियोगिनीगणचरितनामादिकथनाय तान्प्रार्थयामास । **श्रीभास्कररायास्तु** तान् "सावधानीभूय शृण्वन्तु भवन्तः" इत्युक्त्वा क्रमशो योगिनीचरितानि कथयितुमारेभिरे । तदानीमसंख्येभ्यः कण्ठेभ्यो युगपदेवासंख्ययोगिनीचरितानि साश्चर्यं शृण्वन्तः पण्डिताः "कथमसावेक एव युगपदनेकयोगिनीचरितानि वर्णयती"ति चमत्कारकारणजिज्ञासया **श्रीकुङ्कुमानन्दस्वामिपादान्** पप्रच्छुः । स्वामिनश्च विहस्य स्वकमण्डलूदकैस्तेषां चक्षूंषि प्रक्षालयामासुः । अथ ते सर्वे पण्डिता गङ्गायां गगनमण्डले च स्वस्ववाहनेष्ववस्थिताश्चतुःषष्टिकोटियोगिनीः स्वचरितानि स्वमुखेनैव वर्णयन्तीरपश्यन् । **श्रीभास्कररायाणां** दक्षिणस्कन्धे **श्रीललिताम्बां**, वामस्कन्धे च **श्यामलाम्बा**मवस्थितां प्रत्यक्षीचक्रुः । इत्थमत्यद्भुतं दृष्ट्वा विगलिताभिमानाः सर्वे पण्डिताः **श्रीभास्कररायाणां** परदेवतात्मत्वं, तत्प्रणीतललितासहस्रनामभाष्यस्य प्रामाणिकत्वं च गाढं प्रतिपेदिरे । **ललितासहस्रनामभाष्यावसाने** "श्रीविश्वामित्रवंश्य" इति पद्ये श्रीभास्कररायैस्तत्प्रणयनसमयो **विक्रमशकः** १७८५ उपन्यस्तः । नर्मदोत्तरतीरे विक्रमसंवदाख्यस्यैव प्रचलितत्वात् काश्यां सौभाग्यभास्करप्रणयनात्तदन्ते विक्रमकालोल्लेखः समुचित एव । "**गोमान्तकप्रान्तीयसप्तकोटीश्वरक्षेत्रे**" ( संप्रति **नारवें** इति प्रथितग्रामे ) **प्रणीते सेतुबन्धे तु** तद्देशरीत्यनुसारेण **शालिवाहनशक** १६५५ ( शर्मचाप इति ) एव समुदलेखि ।

काश्यामेव भास्कररायैः सोमयागः कृत इत्यपि प्रसिद्धमस्ति । काश्यां **अन्नपूर्णामन्दिरमुख्यद्वारकोणे चक्रेश्वरनामकं** श्रीचक्राङ्कं शिवलिङ्गं तैरेव स्थापितमस्तीत्यपि तच्छिष्यप्रशिष्यपरंपरासु प्रसिद्धमस्ति ।

इत्थमखिलं भारतवर्षं सञ्चारैः पावयन्तो भास्कररायाश्चरमे वयसि **मध्यार्जुनक्षेत्रे** योगपथेन देहं व्यसृजन् । **ई० सन १७५०** समयात्परं तेषां निर्याणसमय इति प्रतीयते ।

असंख्याः पुनः श्रीभास्कररायाणां शिष्याः, तेषां परम्परा अपि संख्यातिगा एव, तथापि कौण्डिन्यगोत्रजावान्तरसर्वज्ञब्रह्माख्यस्वपुरोहितवंशीय**श्रीकालदीक्षितपुत्रो गणेशदीक्षितो भास्कररायाणां** प्रियतमः शिष्य आसीत् । यस्य दीक्षानाम **उमापत्यानन्दनाथ** इति । अस्यैव विद्यावंशोऽद्यापि विद्यया तपसा परदेवतानुग्रहेण च विशिष्टतया विराजते । यैरेवाद्याऽपि **श्रीभास्कररायाणां सम्प्रदायः** सुरक्षितः समभिवर्धते । इति शिवम् ।

अखिलविद्वदेकान्तवशंवदः

**पणशीकरोपाह्वो वासुदेवशर्मा.**



# चतुर्थावृत्तावीषत्प्रास्ताविकम् ।

**अस्मिन् पुनर्मुद्रणावसरे** ( चतुर्थावृत्तौ ) साहित्याचार्यसाहित्यवारिध्यादिविविधबिरुदावल्यलङ्कृतपण्डितप्रकाण्डैः काशीस्थसरस्वतीभुवनसंस्कृतग्रन्थालयाधिकारिभिः **खिस्ते इत्युपाह्वनारायणशास्त्रिमहोदयैः** तथा सूर्यपुर ( सूरत ) निवासिभिर्ज्योतिर्विद्भी **रैकोपनामकैः केशवरामतनूजैः कृष्णशंकरशर्मभिः** तथा प्रतिपदसमुद्भूतशङ्काऽऽकरनिरसनदृढबद्धपरिकरैः श्रीमद्भास्कररायादृतोपासनामार्गेऽतीव **बद्धादरैश्च यत्तत्र** तत्र प्रस्तावनालेखनादावतीव साहाय्यं कृतं तदुपकृतिभरं नैव **विस्मरिष्यामः** ।

एवमनल्पपरिश्रमेण यथामति संस्कृतेऽप्यस्मिन् ग्रन्थे गच्छतः स्खलनन्यायेन दृग्दोषाल्पप्रेक्षानवधानाक्षरयोजकनिबन्धनं मानुषशेमुषीसुलभं स्खलितं दृष्टिसरणिमापतितं निसर्गकरुणावरुणालया निबन्धसंशोधनपरिश्रमविदुषो विदुषो मार्जयेयुरहमपि पुनर्मुद्रणावसरे मार्जयेयेति सप्रश्रयं विज्ञापयति.

**ग्रन्थसंस्कर्ता.**

# श्रीभास्करविलासकाव्यम् ( भुवनाभोगाख्यम् ) ।

## भास्कररायान्तेवासिविश्वामित्रगोत्रश्रीजगन्नाथप्रणीतम् ।

श्रीः ।

श्रेयोमार्गनिरूपणाय शरणापन्नेषु बद्धादरा
दुर्वारप्रतिवादिचक्रविमलीकारप्रकारोत्तराः ।
साष्टाङ्गप्रणमन्नरेन्द्रमुकुटीरत्नप्रभामेदुराः
**श्रीमद्भास्करभारती**पदनखज्योत्स्नाङ्कुराः पान्तु नः ॥ १ ॥

पश्यतु पदेन वेदान्व्यस्यतु वल्मीकतोऽप्युदेत्वथवा ।
अस्य भुवि **भास्करेन्दोः** कस्य न जिह्वेतु धीर्गुणान्गातुम् ॥ २ ॥

क्वाहं मन्दतमप्रज्ञः क्व गुरोर्गुणगौरवम् ।
तथाप्युपश्लोकयामि तन्वानः सफलां गिरम् ॥ ३ ॥

गम्भीरसत्त्वः कुशिकान्ववाये **गम्भीररायो**ऽजनि गेयकीर्तिः ।
श्रुतेन शीलेन धिया नयेन श्रिया च यः स्वं गुरुमन्वकार्षीत् ॥ ४ ॥

विजयपुरसार्वभौमो विवृतमहाभारतस्तदुक्त्या यः ।
विद्यासु भारती सन्नृपनाम्नाप्यत्र **भारती** ववृते ॥ ५ ॥

तेनाभिपन्ने तनुजेऽभ्यहारे **कोनाम्बिकायां** किल मध्यरत्नम् ।
प्रकाशको भास्करवज्जगत्याः प्रधीरभूद्**भास्कररायनाम्ना** ॥ ६ ॥

प्रादुर्भूतः सैष भागानगर्यां पुर्यां काश्यां तातपादोपनीतः ।
**अन्तेवासी सन्नृसिंहाध्वरीन्दोरस्माद्विद्याः** प्रापदष्टादशापि ॥ ७ ॥

स बालभावे जनकोपदिष्टसारस्वतोपासनया नयाढ्यः ।
विद्याः समस्ताः सकलाः कलाश्च विनापि यत्नेन वशे चकार ॥ ८ ॥

सप्तवर्षोऽपि युक्त्या यः सभेश्वरपतेर्मनः ।
सभेशभक्तो भूपालसभे कस्मिन् जयी न सः ॥ ९ ॥

शृण्वन्नेत्रस्य वीप्सा खलु पदविषयेऽपश्यदङ्गैर्विभाषा
न्याये नव्येऽप्यनव्येऽप्यथ च परिणतिर्जैमिनेर्वाक्यजाते ।
छन्दोंऽशे पिङ्गलोऽन्यः श्रुतिशिखरमते सत्यवत्यास्तनूज-
स्तन्त्रेष्वेष स्वतन्त्रा गिरिशगुणनिका कीर्त्यते कीर्तनीयैः ॥ १० ॥

त्यक्तन्यग्रोधमूलः किमु शशिमुकुटः किंस्विदेकास्यशेषो
नागः शेषोऽयमाहो गुरुरमृतभुजामादृतक्ष्माविहारः ।
किं विद्यानां समष्टिर्जगति विविधतां भेजुषीणामुदञ्चत्
पुंभावा भारती वेत्यखिलबुधजनैर्भावितो **भारतीन्दुः** ॥ ११ ॥

महः कापिलं सांख्यतन्त्रे फणिभ्यामनन्यं च योगे विधौ छन्दसां च ।
कृतं संख्यया सर्वविद्यानिषद्यां यमाहुर्महीमण्डले पण्डितेन्द्राः ॥ १२ ॥

चार्वाक्योक्तिरवागजनि समकुचद्बौद्धराद्धान्तभङ्गी
भाट्टो हट्टो विनष्टो व्यरमदथ कथा पश्य पश्यत्पदस्य ।
योगोऽभूदस्तयोगस्त्रिजगति फणितिः कापिली सापि लीना
ध्वान्तश्च ध्वंसिताध्वा श्रुतिशिखरमतस्थापके **भास्करार्ये** ॥ १३ ॥

प्रतिद्वन्द्विसूरिच्छटावादकण्डूविलोपैकलीलाभृदन्तेवसन्तम् ।
उपन्यासधाटीविधूतामरेड्यं विजेतुं तमीष्टां विपश्चिद्व्रजे कः ॥ १४ ॥

संक्षुद्य खण्डमसकृदिक्षुरसत्वा मधुना विधिः कवेरस्य ।
किं निरमिमीत रसनामिति माधुर्या यदुल्लसन्ति गिरः ॥ १५ ॥

माध्वी साध्वी न जज्ञे जगति परिणता गोस्तनी चास्तनीचा
न्यक्कारं शर्कराऽगान्मधुरिमणि भृशं भिक्षुतां प्रापदिक्षुः ।
प्रक्षीणा क्षीरकाङ्क्षा समजनि मधुनो माधुरी चाधुरीणा
मोचाप्याचान्तदर्पा भणितिषु मखिनो **भारतीख्यातिभाजः** ॥ १६ ॥

यस्याऽदृष्टो नास्ति भूमण्डलांशो यस्याऽदासो विद्यते न क्षितीशः ।
यस्याऽसाध्या नास्ति विद्या किमन्यैर्यस्याऽऽकारः सा परा शक्तिरेव ॥ १७ ॥

आ प्राचः कामरूपाद्द्रुहिणसुतनदप्लाविताद्‌ा प्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवरचरितादा च सेतोरपाचः ।
आ केदारादुदीचस्तुहिनगहनतः पुण्यदेशानशेषां-
स्तीर्थान्यग्र्याणि पीठान्यपि च दिविषदां सैप साक्षादकार्षीत् ॥ १८ ॥

कामरूपात्परं नामरूपाभिधं दृष्टवान्नीवृतं दूरतः केवलम् ।
पापभीरुर्यदा भूपतेरासते तत्र नार्यः पुमांसोऽपि दिग्वाससः ॥ १९ ॥

स एष **गङ्गाधरवाजपेयि**सकाशतः साधितगौडतर्कः ।
गङ्गावगाहाद्विरजाः पितॄणां गतोऽनृणत्वं सुकृती गयायाम् ॥ २० ॥

शिवभक्त्यामुपमन्युः शिवापदाब्जार्हणे हयग्रीवः ।
यः पुण्डरीकनयनोपास्ताविह जगति पुण्डलीकोऽभूत् ॥ २१ ॥

साचालोऽखिलतीर्थेष्वाचारो वृद्धिमान्प्रचारणया ।
आत्मविचारः संततमव्यभिचारः शिवेऽस्य भावोऽभूत् ॥ २२ ॥

आनन्दी परिणिन्येऽसावानन्दीनामिकां प्रियाम् ।
सानन्दयन्मनो भर्तुर्मानं दत्त्वा तु पृष्ठतः ॥ २३ ॥

सावरणापत्रपया सालंकारा शुभेन शीलेन ।
सापत्न्या शिष्यैरपि साध्वीनां स्तूयते हि धुर्येषा ॥ २४ ॥

अन्तरंगमतयाऽथ तयासावन्तरङ्गविहृतिं विदधानः
पाण्डुरङ्गमभजत्सुतमाशाः पाण्डुरं गमयति स्म यशो यः ॥ २५ ॥

त्रयीमधीत्याधिगतार्थगेप त्रेता यथाकालमथादधानः ।
आम्नायमाथर्वणमप्रचारमध्यैष्ट चाध्यापिपदग्रजातीन् ॥ २६ ॥

देवीभागवतं नाम पुराणं प्रोक्तलक्षणम् ।
आनीय प्रकटीचक्रे दानी पात्रेष्वदाम्भिकः ॥ २७ ॥
सारल्यशालिचेताः सारं श्रीरामभद्रचरितस्य ।
अष्टमम**द्भुतकाण्डं** स्पष्टदशां प्रापयत्खिलीभूतम् ॥ २८ ॥
भासुरानन्दनाथाख्याद्भासुरो दीक्षया स्वयम् ।
पद्मावत्यम्बिकेत्याख्यां चकार सुदृशः सुधीः ॥ २९ ॥
**शिवदत्तशुक्ल**चरणासादितपूर्णाभिषेकसाम्राज्यः ।
गुर्जरदेशे विदधे जर्जरधैर्यं स वल्लभाचार्यम् ॥ ३० ॥
वादे **मस्करिणं माध्वं** विधूयामुष्य बन्धुजाम् ।
**पार्वतीं** व्यवहत् कीर्त्या समं सत्यप्रतिश्रवाः ॥ ३१ ॥
आसृष्टेरनुवर्तमानमभितः श्वश्रूस्नुषाभावजं
वैमुख्यं परिहृत्य तादृशमिह स्वस्मिन्स्वकीयेषु च ।
अन्योन्यं कमलाविरिञ्चिसुदृशोरातन्वतः संगतं
**श्रीमद्भास्करयज्वन**श्चतुरता वाचा कथं वर्ण्यते ॥ ३२ ॥
काश्यां जज्ञे सोमपीथी यथावत्काले कंचित्तत्र कृत्वा विहारम्[1] ।
शिष्यस्यासौ **चन्द्रसेनस्य राज्ञः** सेवातुष्ट्योवास कृष्णोपकण्ठम् ॥ ३३ ॥
**यादववंशैकमणि**र्यो भोसलभूभृतश्चमूनाथः ।
श्रीगुरुचरणोपास्तौ स्वयमेव प्रापदुपमितिं स्वस्य ॥ ३४ ॥
अनेकाग्रहारप्रतिष्ठागरिष्ठः शिवश्रीधराद्यालयोल्लासनिष्ठः ।
अजस्रप्रवृत्तान्नसत्रो वसिष्ठः स पूर्तानि चक्रे बहून्यार्तबन्धुः ॥ ३५ ॥
**चक्रेश**मस्थापयदेष काश्यां **गम्भीरनाथं** किल कोङ्कणेषु ।
मूलहृदे श्रीमति **पाण्डुरङ्गं वज्रेश्वरं** नाम च सेतुबन्धे ॥ ३६ ॥
संततिमान्नाथपदोः संततिनाम्नेह विश्रुते क्षेत्रे ।
चक्रे स मन्दिरं श्रीचक्राकारेण **चन्द्रलाम्बायाः** ॥ ३७ ॥
बह्नोः कालात्किलाशेषमदश्चोलेषु नीवृति ।
**कहोळेश**मसौ चक्रे महोत्सवनिरन्तरम् ॥ ३८ ॥
साध्वी तदग्रसुदती सह्यसुतातीरभूपरिष्कारे ।
भास्करपुरेऽग्रहारे बद्धाकृति **भास्करेश्वरं** न्यधित ॥ ३९ ॥
यदि श्रीर्नो विद्या भवति यदि सा नैव विनयः
स चेन्नो दातृत्वं तदपि यदि न स्यान्मृदु वचः ।
इति स्मायं लोके नियतमसमानाधिकरणो
गुणग्रामः पूर्णो जगति ववृधे **भास्करबुधे** ॥ ४० ॥
नवस्यन्दिमाध्वीकधारानुकारप्रकारोल्लसत्साहितीसौहितीकः ।
विनिःश्वासकल्पं भुवः कल्पशाखी ववन्ध **प्रवन्धान्प्रबन्धा स नैकान्** ॥४१॥

---

१ 'निवासम्' इति पाठः.

दान्तेषु वर्यैर्वेदान्ते नितान्तेडितनैपुणः ।
अतनोदान्तरध्वान्तखण्डकं **चण्डभास्करम्** ॥ ४२ ॥
लीलामात्रेरितया नीलाचलपूर्वया चपेटिकया ।
विमताद्दतं **प्रहस्तं** व्यतनिष्ट विहस्तमब्जनिभहस्तः ॥ ४३ ॥
पूर्वमीमांसकाग्रेसरैः श्लाघितः पूर्वमीमांसयोद्दामकक्ष्याकुलम् ।
**वादकौतूहलं** नाम चक्रे कृती वादकौतूहली सूनुनाऽसौ गुरोः ॥ ४४ ॥
**चन्द्रोदयं** च **भाट्टोपपदं** भट्टारकः प्रवीणानाम् ।
मध्यायाः कौमुद्या अपि टीकां **रसिकरञ्जनीं** विदधे ॥ ४५ ॥
प्रतिवादिशिरोघट्टकुट्टाकप्रतिभाभरः ।
तार्किकाणां मण्डनं स ततान **न्यायमण्डनम्** ॥ ४६ ॥
छन्दसि **सौत्रं भाष्यं छोटीवृत्तिं** प्रवृत्तिमान्धर्मे ।
**वार्तिकराजं वृत्तोपपदं चन्द्रोदयं** च चक्रेऽसौ ॥ ४७ ॥
वस्तुमर्हों धुरि सतां वस्तुतः पिङ्गलापरः ।
स स्तुतं प्राणयच्**छन्दःकौस्तुभं** विबुधोत्तमैः ॥ ४८ ॥
विद्वन्मनोनन्दनचन्द्रशालां तद्वत्प्रणिन्ये खलु **चन्द्रशालाम्** ।
प्रधीः **कटोरी**मपि लोभनीयपदार्थपूर्णामिह लब्धवर्णः ॥ ४९ ॥
**मधुराम्लं** व्यधात्काव्यं मधुराम्लरसप्रियः ।
**सुभाषितं भास्कराङ्कं** बभाषे मृदुभाषितः ॥ ५० ॥
प्रचण्डं दुरितव्रातखण्डने **शिवदण्डकं** ।
**मुक्तकानि** च पद्यानि मुक्तावद्यान्ययं जगौ ॥ ५१ ॥
तत्त्वज्ञः **स्मृतितत्त्वाख्यां** कृतिं सत्त्वगुणाश्रयः ।
मर्मविद्धर्मशास्त्रस्य कर्मठः सैष निर्ममे ॥ ५२ ॥
**सहस्रब्राह्मणभुजिविधिखण्डस्य** विश्रुतः ।
बौधायनप्रणीतस्य बुधो **व्याख्यामरीरचत्** ॥ ५३ ॥
**शङ्खचक्राद्यङ्कनस्य** स शङ्खलिखितोपमः ।
**प्रायश्चित्तं** जगादैकादश्या अपि **विनिर्णयम्** ॥ ५४ ॥
**प्रदोषभास्करं** चक्रे **तृचभास्कर**मप्यसौ ।
**कुण्डभास्करसंज्ञां** च कृतिं भास्करपण्डितः ॥ ५५ ॥
नानाविधैरसौ वृत्तैर्नाम्**नामष्टोत्तरं शतम्** ।
अष्टमूर्तेरतिस्पष्टं व्याचष्टेस्म विशिष्टधीः ॥ ५६ ॥
**गणेशनामसाहस्रव्याख्यां** विख्यातिमान्गुणैः ।
**खद्योतनाम्नीं** निष्पाद्य व्यद्योतिष्ट स भास्करः ॥ ५७ ॥
**स्कान्दीयं चन्द्रलाम्बायाश्**चन्द्रोपममुखद्युतिः ।
**माहात्म्यं** ख्यातमाहात्म्यो **व्याचख्यावतिविस्तृतम्** ॥ ५८ ॥

मत्तप्रतिवदवदनप्रत्तजनानुत्तरत्वमुद्राकः ।
**नाथनवरत्नमालामञ्जूषां** मञ्जुलां जुगुम्फासौ ॥ ५९ ॥
**भावनोपनिषद्भाष्यं सप्रयोगं** स भाविकः ।
चक्रे **श्रीसूक्तभाष्यं** च चिरं परिचितः श्रिया ॥ ६० ॥
**कौलोपनिषद्भाष्यं** कुलजैः सेव्यो जनैश्चकारासौ ।
**त्रैपुरमहोपनिषदं** त्रैपुरसिद्धान्तविद्विवव्रे सः ॥ ६१ ॥
**ललितानामसाहस्रभाष्यं** भाष्यकृतां समः ।
**सौभाग्यभास्कराख्यं** स भाग्यलब्धं व्यधात्सुधीः ॥ ६२ ॥
सौभाग्यरत्नाकरभाग्यहेतुं **सौभाग्यचन्द्रोदय**मागमज्ञः ।
श्रीरामवन्निर्धुतपापबन्धं चकार चात्यद्भुत**सेतुबन्धम्** ॥ ६३ ॥
भास्करकुलजेन पुरा बद्धः सेतुः स्वयं तरितुमब्धिम् ।
**भास्कररायेण** जगत्तारयितुं भवपयोधिरयमरचि ॥ ६४ ॥

**वरिवस्यारहस्यं** च वरिवस्याप्रकाशकम् ।
वरिवस्यापरैरेव वरिवस्यमचीकरत् ॥ ६५ ॥
जामदग्न्योपज्ञ**कौलकल्पसूत्रस्य** सूत्रवित् ।
**रत्नालोकाभिधां वृत्तिं** यत्नादेष विना व्यधात् ॥ ६६ ॥

**मालामन्त्रोद्धारं** गुणमणिमालापरिष्कृतोऽव्याख्यत् ।
**गुप्तवतीं सप्तशतीटीकामपि** लुप्तसंशयां विदधे ॥ ६७ ॥

सर्वज्ञो विशदां सप्तशतीमन्त्रविभाजिकाम् ।
प्रणिनाय **शतश्लोकीं** पुण्यश्लोकपदोचितः ॥ ६८ ॥
असंख्याता हि कृतयः संख्याता अपि विष्टपे ।
संख्यातुं केन शक्यन्ते संख्यावचक्रवर्तिनः ॥ ६९ ॥

**इत्येवं श्रीमद्भास्कररायप्रणीतानां केषांचिद्ग्रन्थानां निर्देशः ।**

---

## श्रीमद्भास्कररायकृतपद्यसंग्रहः

**तत्सार्वज्ञ्योपज्ञकानि प्राज्ञहृद्यानि कानिचित् ।**
**अद्याहमनवद्यानि पद्यानि प्रतिपादये ॥ ७० ॥**

"श्रीरामं प्रतिपुष्कराभिधमहायक्षेण **वेदत्रय**-
व्याख्यानावसरे विशिष्य कथितं श्रीविष्णुधर्मोत्तरे ।
एतां धेनुमुपह्वयामि सुदुघामित्यृग्गतं **शंकरा**-
**चार्यं** शिष्यचतुष्टयेन सहितं वन्दे गुरूणां गुरुम् ॥ ७१ ॥
वर्षेष्वतीतेषु शकेषु षट्सु तिष्येऽवतीर्णं भुवि **शंकरार्यम्** ।
शिष्यैश्चतुर्भिः सहितं शिवादिपारम्परीकावधिमानमामः ॥ ७२ ॥

हन्ताहन्ताहन्तान्तर्वाणिगणस्य तत्त्वभुवि रन्ता ।
ध्वन्यध्वन्यध्वन्यः **श्रीनरसिंहाध्वरी** गुरुर्धन्यः ॥ ७३ ॥

साक्षाद्द्राक्षासमक्षापतदमृतझरीमाधुरी साधुरीति-
मल्लीवल्लीमतल्लीकुसुमपरिमलाखर्वगर्वापहर्त्री ।
भाषा येषामशेषा विनटदजजटाजूटसंभ्रान्तगङ्गा-
तुङ्गत्वङ्गत्तरङ्गध्वनिमधरयते तान्नुमः **श्रीनृसिंहान्** ॥ ७४ ॥

विधिविष्णुमुखामरोदयस्थितिनाशेषु शिवोऽप्यनीश्वरः ।
जगदम्ब तव त्वयं क्रमः क्षणमुद्दालकपुष्पभञ्जिका ॥ ७५ ॥

शिरःस्थशशलक्षणं त्रिपुरदैत्यसंतक्षणं
दुरन्तविषभक्षणं सुरनिकायसंरक्षणम् ।
नरीनरविलक्षणं रविकृशानुचन्द्रेक्षणं
स्मरार्दनविचक्षणं **परशिवं** भजेऽनुक्षणम् ॥ ७६ ॥

चायं चायं दुरितनिचयं सीदतां वत्तयुपायं
पायं पायं शमितकलुषं कार्ष्णमम्भोऽनपायम् ।
ध्यायं ध्यायं विषयकटुतां भोश्चिरायोरुगायं
गायं गायं विहरत विभुं **वेणुगोपालनाट्यम्** ॥ ७७ ॥

इदमहमोरुभयोरपि यदस्ति नियतावभासकं भानम् ।
तस्यापि साक्षिणी चित्तदुपाधिविनाकृताप्यस्ति ॥ ७८ ॥

तद्दत्तैश्वर्यभाजः परमशिव कथंकारमन्यानमर्त्यान्
याचे देहीति विष्णुद्रुहिणहरिमुखान्भिक्षुकान्भिक्षुकोऽहम् ।
यत्तावद्द्वादशाहक्रतुविकृतिशतोक्थ्याङ्गभूतोऽपि चोक्थ्यो
ज्योतिष्टोमोक्तधर्मानभिलषति नतु द्वादशाहोक्थ्यधर्मान् ॥ ७९ ॥

आलोलोच्यकि सूरिसंप्रतिपनीपन्नांश्चनीकारयन्
शब्दान्संसदि बम्भणीतकितरां यश्चर्करीतानपि ।
कीर्त्तिस्तस्य वरीवधीतकि जनाः सर्वेऽपि चाकत्थति
स्वर्गं चाभिपनीपदीतकि न चैतेभ्यः सनीस्रस्यते ॥ ८० ॥

भ्रश्यत्कूलकुकूहनाथ हरिणा जालमत्वमध्यापितात्
धिग्दण्डाजिनिकान्धकीद्धकिदिहायश्शूलिकान्पार्श्वकान् ।
ब्रह्मात्मैक्यपुरो नु योऽनुरहसं यायावरः सस्यको
मर्त्यत्रा समयाकरोति विधिवत्तेनास्त्वजर्यं मम ॥ ८१ ॥

द्रव्याश्रयी गुणोऽथच दुःखध्वंसो विमुक्तिरिति च मुनिः ।
ऋतमाह गौतमोऽसौ त्रिभुवनमपि साक्षि यदिह सानुभवम् ॥ ८२ ॥

द्वित्रप्रस्तरखण्डगर्भकुतुपध्मानभ्रमाधायिवाक्
चेद्वैयाकरणो मनागपि रसं काव्यस्थितं विन्दति ।
तन्वाने रचिताभेटीं गतरसां मध्येनभः शारदे
निर्घातैर्बधिरीकृतश्रुतिपुटे को वापराधोऽम्बुदे ॥ ८३ ॥

शुष्कोदर्ककुतर्ककर्कशगिरा चोद्यानि ये कुर्वते
साहित्येऽनुभवैकगोचररसे स्युस्तेऽपि चेत्पण्डिताः ।
को मन्तुर्महिलां निहत्य कुचयोरन्त्राणि संप्राश्नतां
वृक्षाणां कुसुमानि मर्षितवतां शाखामृगाणामपि ॥ ८४ ॥

वित्ते तत्पुरुषे तु तत्पुरुषति त्वन्नाम्नि शैवाग्रणी-
रल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बहुव्रीहिभाक् ।
श्रीरामेश्वरकर्मधारयमुनीकुर्वन्कविर्भास्करः
कस्मादण्वपि कर्म धारयति न द्वन्द्वेऽपि निर्द्वन्द्वति ॥ ८५ ॥

कावेरि त्वं सरस्वत्यनवरतसमाविष्टचित्ता तथाहं
न क्रोधस्ते ममापि त्वमहमपि कवेरात्मजत्वं प्रपन्नौ ।
भूमि न्यञ्चत्कबन्धा त्वमहमपि यदा जीवनं पातुमीहे
त्वं मे पातुं यदिच्छस्यनितरगुणयोरावयोः को विशेषः ॥ ८६ ॥

'गयाप्रयाग' द्वितयं वैपरीत्येऽपि तादृशम् ।
'काशिका' पि तथैवातस्त्रिस्थली स्तूयते बुधैः ॥ ८७ ॥

त्वद्भालेऽग्निशिखालेपात्तद्भालेऽग्निशिखा भवेत् ।
गङ्गे शिवोऽपि न त्वत्तः कृतप्रतिकृते कृती ॥ ८८ ॥

तवाङ्घ्रौ यः प्रणिपतेत्तस्याङ्घ्रौ निपतत्यहो ।
गङ्गे शिवोऽपि न त्वत्तः कृतप्रतिकृते कृती ॥ ८९ ॥" इति ।

जायात्मजाभ्यां च विधीश्वराभ्यां विष्णोः समाहारयुगं निबद्धम् ।
अस्तीह ते विन्दति शाब्दिकस्तदिति प्रतिज्ञा कविभास्करस्य ॥ ९० ॥

न स्याच्चेदिति वाक्यस्य कोऽर्थः कस्मिन्पिकभ्रमः ।
आन्ध्रीगीर्वाणभाषाभ्यामेकमेवोत्तरं वद ॥ ९१ ॥ काकपोते ।

कमले कमलोत्पत्तिः श्रूयते न च दृश्यते ।
दृष्टं शंभोः पदाम्भोजे विष्णुलोचनपङ्कजम् ॥ ९२ ॥

मर्त्यं मर्त्यां गिरिं शुल्वं शब्दशास्त्रं च वर्णय ।
कविभास्कर एवात्र ब्रूते धातुगुणास्पदम् ॥ ९३ ॥

वीर श्रीकामरूपक्षितिरमणयशोनाशिना नायकेन
त्रैलोक्ये श्वेतिमानं कलयति यमुनाप्यत्यजन्नैजरूपम् ।
संदिग्धस्तीर्थराजोऽप्यभवदथ पुनः सा नदी त्वत्प्रतापा-
दामूलाग्रं यथावत्समजनि यवनीसंघद‍ङ्गीरपूरैः ॥ ९४ ॥

प्रस्तौमि प्रतिहार्येव जनैरुद्गीयतेऽखिलैः ।
निधनोपद्रवैर्हीनं साम तेऽन्यादृशं नृप ॥ ९५ ॥

रुद्रभूप भद्रमस्तु यद्रिपूनुपद्रवैरिह द्रुतं प्रविद्रवय्य काद्रवेयपूर्दरीम् ।
तद्रमाविनिद्रणेन मुद्रिता दरिद्रता दरिद्रतान्तदद्रिभिद्वनद्रुमान्नचाद्रिये ॥ ९६

श्रीभास्करेणैव भुवि स्थितानि छत्राणि सर्वाण्यधरीकृतानि ।
छायां त्वदीयामभिवाञ्छतिस्म श्रीभास्करश्छत्रपतिस्ततस्त्वम् ॥ ९७ ॥

भोः पद्मपत्र भवतां यदपां कणोऽपि न स्पृश्यते समुचितैव परस्त्रमीः सा ।
एवं धिया त्वयि धृते निहते सति त्वमाषाढभूतिनिपतद्विलसीति युक्तम् ॥ ९८ ॥

कूपाकूपारकुल्यास्वथ च नदनदीखेयकासारवापी-
ष्वापातालं प्रविष्टैर्दशशतगुणितैरंशुभिर्वारि भूरि ।
ग्राहं ग्राहं निषिञ्चन्नवसि दिनपते विश्वमेतत्समस्तं
तत्ते किं वर्णयामो निरुपधिकरुणां दानशौण्ड्यं च भूयः ॥ ९९ ॥

भूषावानखिलैर्गुणैः स्वकृतिभिः संतानवान्भूयसा
विद्याभिर्धनवान्सुधाधवलया कीर्त्या चिरं देहवान् ।
पित्रा दैवतवानभूत्सुकृतवाँल्लोकोपकारेण यः
साधर्म्यं लभतामनेन भुवि कः श्रीभारतीयज्वना ॥ १०० ॥

श्रीमद्भास्कररायनैकजनिषु त्वद्दानतोयैर्भृता-
दासर्गं जलधेरवाप्तजनुषः स्वःशाखिनो गौश्च सा ।
औदार्यं भजते हि कारणगुणाः कार्येषु न स्युः किमि-
त्येनं पूर्णमनोरथाः प्रतिदिशं सर्वेऽर्थिनोऽप्यस्तुवत् ॥ १०१ ॥

नाद्रुह्यत्कस्मा अपि नास्मार्षीच्चेतसाऽपि परदारान् ।
नास्पृहयत्परराये भास्कररायो मखी धन्यः ॥ १०२ ॥

अदीधरच्चेतसि चन्द्रचूडमबीभरद्बन्धुजनं स दीनम् ।
अचीकरत्किंच मखानशेषानतीतरत्संसृतिमात्मभक्तान् ॥ १०३ ॥

पद्मोल्लासैकहेतुर्निखिलकुवलयस्यापि मोदप्रदायी
लोकालोकोदरैकोदयमथ परतोऽप्यस्य देदीप्यमानः ।
अह्न्येव प्रोज्जिहानं दिनमनु च निशां द्योतमानः प्रकाशं
तिग्मांशोर्नातिशेतां कथमिव सुमहान्भारतीयः प्रकाशः ॥ १०४ ॥

श्रीमद्भास्कररामयज्वतिलकस्योच्चैर्यशःस्रोतसः
पात्रं दिग्वलयान्तरालमभवद्वैरोधसी रोदसी ।
अश्मानन्ति कुलाचला जलधयः सप्तह्रदन्त्यैन्दवं
बिम्बं कंबवतीह नूनमुडवः शम्बूकगुम्भन्ति च ॥ १०५ ॥

निर्यातीव पदाम्बुजान्मधुरिपोः सौतीव पद्मालयां
वेवेक्तीव पयोऽम्बुनी विहरति स्रष्टुर्मुखाब्जेष्विव ।
किंच स्मेरयतीव कैरववनीं द्वेष्टि करीन्द्रानिव
क्ष्मां मूर्ध्नेव बिभर्ति कीर्तिरमला श्रीभारतीयज्वनः ॥ १०६ ॥

हीरति काञ्च्यां हारति चोलतटेऽङ्गेषु चन्दनाम्बवति ।
कुन्दति कुन्तलदेशे कीर्तिर्गम्भीररायतनयस्य ॥ १०७ ॥

कीर्त्या यस्य जगत्रये धवलिते सर्वे गजाः स्वर्गजाः
किंचोच्चैःश्रवसो हया नृपतयः सर्वेऽपि सीरायुधाः ।
नद्यः स्वःसरितोऽखिलाः फणभृतो दर्वीकराधीश्वराः
शैला हन्त हिमालया वत्रृतिरे सर्वे सुराः शंकराः ॥ १०८ ॥

कुमुदं वर्धयन्पुण्योल्लासी कोऽप्येव भास्करः ।
दुन्दुभिं ध्वनयन्नुर्व्यां प्रमोदी दिनमानशे ॥ १०९ ॥

वयसि चरमे लब्ध्वा सह्याद्रिजातटगेहितां
विदितनिखिलत्र्यन्तार्थं चिदैक्यविभावनात् ।
महिममहति क्षेत्रे मध्यार्जुने शिवतां गतो-
ऽप्यमलवपुषा कीर्त्या जागर्ति शाश्वतिकेन सः ॥ ११० ॥

अन्येन्द्रं जगदस्थितेन्द्रमपि वा कर्तुं प्रगल्भेऽन्वये
संभूतो ननु बालकृष्णसचिवोत्तंसस्य रूपान्तरम् ।
लक्ष्म्यम्बाहृदयाम्बुधेर्हिमरुचिः प्राज्ञैः प्रशास्यामिमां
प्राणैषीत्सुमतिर्यथामति जगन्नाथाभिधानः कृतिम् ॥ १११ ॥

अब्दे प्रमोदसचिवे शब्दार्थपरिष्कृता कृता कृतिना ।
भास्करविलाससंज्ञा भायाद्भुवने कृतिश्चिरायैषा ॥ ११२ ॥

अनेन वागध्वरेण समाराद्धा कथंचन ।
दयतां देशिकात्मा मे देवी श्रीललिताम्बिका ॥ ११३ ॥

इति श्रीविश्वामित्रमहर्षिगोत्रपयोधिकैरवमित्रस्य श्रीमद्भास्करराय-
भारतीदीक्षिताग्निचिदन्तेवासिना सनाथस्य जगन्नाथस्य
कृतिर्भास्करविलासकाव्यमिदं भुवनाभोगाख्यातं
संपूर्णतामयासीत् ।



## ललितासहस्रनामभाष्योदाहृतग्रन्थानां ग्रन्थप्रणेतॄणा च मातृकाक्रमेण निर्देशः ।

इति ललितासहस्रनामभाष्योदाहृतग्रन्थानां
ग्रन्थप्रणेतॄणां च निर्देशः।



श्रीः ।

# ललितासहस्रनाम ।

## भास्कररायप्रणीतसौभाग्यभास्करभाष्योपेतम् ।

### उपोद्घाताख्या प्रथमा कला ।

श्रीललिताम्बायै नमः ।

श्रीगम्भीरविपश्चितः पितुरभूद्यः कोनमाम्बोदरे
विद्याष्टादशकस्य मर्मभिदभूद्यः श्रीनृसिंहाद्गुरोः ।
यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभव-
त्स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥ १ ॥

गुरुचरणसनाथो भासुरानन्दनाथो विवृतिमतिरहस्यां वीरवृन्दैर्नमस्याम् ।
रचयति ललिताया नामसाहस्रिकाया गुरुकृतपरिभाषाः संविवृण्वन्नशेषाः ॥ २ ॥

अष्टाभिर्वाग्जायानामधिपतिभिरमोघोक्तिभिर्देवताभि-
र्मात्राज्ञप्ताभिरर्घ्यं यदरचि ललिता दिव्यनाम्नां सहस्रम् ।
यद्ब्रह्माणीरमेशप्रभृतिदिविषदां विस्मयाधानदक्षं
तत्रैकस्यापि नाम्नः कथमिव विवृतिं मादृशः कर्तुमीष्टे ॥ ३ ॥

तथापि श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काप्यन्यतमिका ।
मदीज्यश्रीनाथत्रयचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति ममता सा मम मता ॥ ४ ॥

आ प्राचः कामरूपाद्द्रुहिणसुतनदप्लाविताादा प्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवररचितादा च सेतोरवाचः ।
आ केदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा
ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥ ५ ॥

इह खलु निखिलपुरुषार्थसाधने भगवत्याराधनेऽभ्यर्हिततमस्य रहस्यनामसाहस्र-
कीर्तनस्य रहस्यतरसद्गुरुसंप्रदायैकवेद्यस्वरूपत्वेन तान्संप्रदायान् शिष्यानुजिघृक्षया

**त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् ।**
**त्रिगुणैर्देवैर्निनुतामेकान्तां विन्दुगां महारम्भाम् ॥ १ ॥**

---

दिदर्शयिषवः श्रीमन्नृसिंहानन्दनाथनामानोऽस्मद्गुरुचरणाः निरन्तरनिरन्तराया अपि शिष्यशिक्षायै मङ्गलमाचरन्ति—**त्रिपुरेति** । त्र्यात्मकं **पुरं भूपुरं** मण्डलकोणरेखामन्त्रादिसमूहो वा यस्याः सा त्रिपुरा । तदुक्तं कालिकापुराणे-'त्रिकोणं मण्डलं चास्या भूपुरं च त्रिरेखकम् । मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः ॥ त्रिविधा कुण्डलीशक्तिस्त्रिदेवानां च सृष्टये । सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मते'ति । कुलस्य सजातीयसमूहस्य निधिं मातृमानमेयरूपत्रिपुट्या एकज्ञानविषयत्वेन साजात्यात्, घटमहं जानामीत्येव ज्ञानाकारात् 'जानामीति तमेव भान्तमनु भात्येतत्समस्तं जग'दिति श्रीमदाचार्यभगवत्पादोक्तेः, तदेव हि कुलम् । 'सजातीयैः कुलं यूथ'मिति कोशात् । परमशिवादिस्वगुरुपर्यन्तो वंशो वा कुलम् । 'संख्या वंश्येने'ति पाणिनिसूत्रे 'वंशो द्विधा विद्यया जन्मना चे'ति महाभाष्यात् । आचारो वा कुलम् । 'न कुलं कुलमित्याहुराचारः कुलमुच्यते । आचाररहितो राजन्नेह नामुत्र नन्दती'ति भविष्योत्तरपुराणात् । सुषुम्नामार्गो वा कुलम् । कुः पृथिवीतत्त्वं लीयते यस्मिंस्तदाधारचक्रं तस्य शक्यस्य संबन्धात् । अरुणा रक्ता श्रीः कान्तिर्यस्यास्ताम् । कामराजेन कामेश्वराख्यपरमशिवेन विद्धं सामरस्यापन्नं अङ्गं यस्याः । त्रिगुणैः सत्वरजस्तमोमयैर्देवैर्विष्णुब्रह्मरुद्रैः नितरां नुतां स्तुताम् । एकान्तां रहोदेवतां, एकां मुख्यां तां प्रसिद्धां वा । अश्चासाविश्चेति कर्मधारये शिवकाम इत्यर्थात्सुन्दरीं वा । 'अकारो ब्रह्मविष्ण्वीशकमठेष्व'ति विश्वः । 'इकारो मन्मथः प्रोक्त' इत्यनेकार्थध्वनिमञ्जरी च । बिन्दुं सर्वानन्दमयं चक्रं गच्छतीति तथा । महान्ब्रह्माण्डादिरूप आरम्भो यस्यास्तामीडे स्तौमीत्यर्थः । **अथात्रैवं नामोद्धारः प्रदर्श्यते**—त्रिपुरेत्यत्र पकार एकसंख्याया वाचको रेफस्तु द्वित्वसंख्यायाः । यदाह वररुचिः—'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः ॥ नञे शून्यं ज्ञेयं तथा स्वरे केवले कथिते'ति । पिण्डान्त्यैरित्यस्य व्यञ्जनसमूहे चरम एव सांकेतिक इत्यर्थः । 'अङ्कानां वामतो गति'रिति न्यायात्पुरेत्यनेनैकविंशतिसंख्या कथिता भवति । एवमुत्तरत्रापि । तेन त्रि इत्याकारकपदारब्धानि नामानि त्रिनयनेत्यारभ्य त्रिकोणगेत्यन्तान्येकविंशतिरेवेत्यर्थः । निधयो नव 'नव ग्रहद्वारनिधिप्रजेशा' इति छान्दसीयवचनात् । कुलपदारब्धानि नामानि नव कुलामृतैकरसिकेत्यारभ्य कुलरूपिणीत्यन्तानि । अरुणाः सूर्या द्वादश श्रीपदारब्धानि श्रीमातेत्यारभ्य श्रीशिवेत्यन्तानि । कामपदारब्धानि राजसंख्याकानि षोडश कामेशबद्धमाङ्गल्येत्यारभ्य कामकेलितरङ्गितेत्यन्तानि । विद्धाङ्गीं विइत्यक्षरारब्धान्येकोनचत्वारिंशत् विशुक्रप्राणां हरणेत्यारभ्य विरागिणीत्यन्तानि । त्रिगुणैर्गुणनिधिर्गुणप्रिया गुणातीतेति त्रीणि । निनुतां निकारारब्धानि षष्टिः निजारुणेत्यारभ्य निरालम्बान्तानि । एकान्तताम्बूलपूरितमुखीत्येकं नाम । बिन्दुगां बिन्दुमण्डलवासिनी बैन्दवासना बिन्दुतर्पण-

**ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः ।**
**परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥ २ ॥**
**पञ्चाशदेक आदौ नामसु सार्धद्व्यशीतिशतम् ।**
**षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥ ३ ॥**
**दशभूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम् ।**
**मुनिसूतहयाम्बाश्वाम्बाश्वोक्तिर्ध्यानमेकेन ॥ ४ ॥**

**अगस्त्य उवाच ।**

**अश्वानन महाबुद्धे सर्वशास्त्रविशारद ।**
**कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥**

---

संतुष्टेति त्रीणि । महारम्भां महापदारब्धानि द्विचत्वारिंशत् महालावण्येत्यारभ्य महेश्यन्तानि ॥ १ ॥ छलाक्षरनामसूत्रेभ्यो नामविभागादेर्विलम्बेन क्लिष्टतया ज्ञायमानत्वात्तत्रत्या एव परिभाषाः सुलभोपायेन सुबोधा इति विद्योपासकानां तोषाय कथ्यन्त इत्यर्थः । छलाक्षरसूत्राणां विलम्बितार्थबोधजनकत्वं तत्रतत्र प्रकटीकरिष्यामः ॥ २ ॥ आदौ प्रथमभागे पञ्चाशदेकश्च । एकपञ्चाशच्छ्लोका इत्यर्थः । वक्ष्यमाणस्य सहस्रभोजनप्रयोगस्य बहुदिनक्रियमाणत्वपक्षे प्रथमदिन एकपञ्चाशच्छ्लोकपाठः । ध्यानश्लोकस्तु प्रत्यहं पठनीय इति वैषम्यध्वननाय विभज्य कथनम् । नामसु विषये द्व्यशीत्युत्तरं शतमर्धश्लोकश्च अन्ते फलश्रुत्यादिप्रकरणे । संहत्य तु त्रीणि शतानि विंशतिश्च श्लोका इत्यर्थः ॥ ३ ॥ अथ प्रथमभागं विभज्य दर्शयति—भूः एकः । नृपालाः षोडश । अध्युष्टं सार्धत्रयम् । मुनिरगस्त्यः । हयाश्वपदानि हयग्रीवपराणि । दशश्लोका अगस्त्योक्तिरूपा इत्यादिरीत्या यथाक्रममन्वयः । अगस्त्याख्यो हि महामुनिः श्रीविद्योपासकाग्रेसरस्तत्रभगवतो हयग्रीवस्य देशिकेन्द्रस्य मुखाद्ब्रह्माण्डपुराणीयैर्मन्त्रन्यासपूजापुरश्चरणहोमरहस्यस्तोत्राख्यैः सप्तभिः खण्डैः श्रीमातुः प्रादुर्भावादिरहस्यजातमाकर्ण्य इतोऽपि परमरहस्यं नामसहस्रमस्तीति तपोबलादेव निश्चित्य तद्भक्तायापि मह्यं किमिति गुरुभिर्न दत्तमित्यनुपदेशनिमित्तांशे सन्दिहानः पृच्छतीत्याह भगवान् सूतः ॥ ४ ॥ न गच्छतीत्यगः पर्वतस्तं विन्ध्यनामानं स्त्यायतीत्यगस्त्यः । स्त्यानं स्तम्भनम् । साच कथा काशीखण्डे द्रष्टव्या । असङ्गतत्वापनोदाय पूर्वकथाप्रसङ्गं सामान्येन स्मारयति—अश्वेति । देवीभागवते प्रथमस्कन्धे तावदियं कथा स्मर्यते । पुरा किल भगवान् विष्णुर्यज्ञसंरक्षणादिघनतरकार्यार्थं कृतबहुजागरः श्रान्तः शार्ङ्गधनुषः कोटिं ग्रीवयावलम्ब्य निद्राणोऽभूत् । तदा ब्रह्मरुद्रादयः कार्यविशेषसिषाधयिषया तज्जागरणाय वम्रिनामकक्रमिभ्यो यज्ञभागमिच्छद्भ्यो दत्त्वा तन्मुखात्प्रत्यञ्चामत्रोटयन् । तेन कोटेरुच्चलनाच्छिरोऽप्युड्डीनं क्वापि गतमभूत् । ततः शोकाविष्टाः सुरास्तच्छीर्षमलभमानास्त्रिपुरसुन्दरीं तुष्टुवुः । सा तुष्टा सती हयशिरोयोजनेनैनं जीवयतेत्याज्ञाप्य भगवत्यन्तरधत्त । ततस्तथा

